# केशवीय शिक्षा

अथातः केशवीशिक्षां व्याख्यास्यामः

पदादौ पूर्व्वाहल्वोर्द्विर्व्यौच्चारौ सम्पूर्व्वयोश्छन्दसि १

पदान्तमध्यत्रृहरेफयुग्यस्य यश्च २

षः खष्टुमृते च ३

अहल्शल्यूर्द्ध्वरेफस्य सैकारः प्राक् च ४

अनुस्वारस्य ठं० शलि रेफे च परे

ह्रस्वाद्दीर्घो दीर्घाद्ध्रस्वः सँयोगे गुरुश्च ५

शर्पूर्व्वाणामृद्धीनकादिपञ्चवर्गाणां द्वित्वं विसर्गाद्
रेफयुक्तानाम् ६

न सोऽव्योश्च ७

हल्युतायुतस्योः सैकारश्च ८

ह्रस्वं किञ्चिद्दीर्घं हल्युताकारे हहल्विसर्गयुग्वर्णे च न
संहितायाम् ९

सूत्रार्थे कारिकाऽपि ।

ह्रस्वं दीर्घं भवेत्किञ्चित्संहितायां परो न चेत्
हल्संयुतायुताकारश्चावर्णो हल्विसर्गयुक् १०
नवानामपि सूत्राणां षण्मिताः कारिकास्त्विमाः
केशवेन कृतास्ताः स्युर्वेदाध्ययनबोधिकाः ११
परिभाषाङ्कसूत्रं च याजुर्वेदं सकारिकम्
दैवज्ञकेशवेनेदं कृतं हस्तस्वरान्वितम् १२
ह्रस्वोदात्तादिभिर्भेदैः सहस्तस्वरलक्षणम्
शिक्षादिभिः षडङ्गैश्च विज्ञेयं वेदपाठकैः १३

इति श्रीदैवज्ञकेशवकृता प्रतिज्ञासूत्रानुसारिणी
केशवीशिक्षा समाप्ता

Reference:
Ācāryaśrīrāmaprasādatripāṭhī, *Maharṣiyājñavalkyādiviracitā Śikṣāsaṅgrahaḥ*, Sampurnand Sanskrit University Press: Varanasi, 1989,

